# संस्कृत-शिशु-गीतम्



डा. सुभाष वेदालंकार

-प्रकाशन, जयपुर
...ादर्श नगर, जयपुर ३०२००४

# प्राक्कथन

भारत के भावी कर्णधार कोटिशः शिशुओं को 'संस्कृत-शिशु-गीतम्' समर्पित करते हुए परम हर्ष हो रहा है ।

हिन्दी और अंग्रेजी भाषा में तो शिशु–गीतों की अनेक पुस्तकें प्रकाशित हुई है, परन्तु संस्कृत में 'शिशु गीत' लिखने का सम्भवतः यह यह प्रथम प्रयास है ।

'संस्कृत-शिशु–गीतम्' के चार उद्देश्य हैं।

१. मनोरंजन २. संस्कृत-शिक्षण ३. संस्कृत में रुचि जागृत करना ४, नैतिक शिक्षा, लोक व्यवहार एवं राष्ट्रभक्ति की भावना भरना ।

गीतों के माध्यम से भारतीय संस्कृति की प्रायः समस्त विशेषताओं की चर्चा सरस, रोचक एवं सरल भाषा के माध्यम से की गई है ।

गीतों का उच्चारण मैंने अपने पुत्र चि. विश्रुत तथा सुश्रुत से करवा कर देखा है,उनके आधार पर आयु का स्तर देखते हुए गीतों की भाषा लिखी है।

यदि ये गीत सामान्यजन में एवं शिशुओं में संस्कृत के प्रति रुचि जागृत कर सकें, और उनमें अच्छे संस्कार पैदा कर सकें तो मैं अपना प्रयास सफल समझूंगा ।

मेरी सहधर्मचारिणी मनीषा ने गीतों के संशोधन में सहयोग देने के साथ २ समय २ पर बहुमूल्य सुझाव दिये । मेरे छात्रों प्रिय विनोद, प्रिय विमलेश, प्रिय कुसुम आदि ने मूल प्रति तैयार करने में तथा प्रूफ आदि देखने में सहयोग दिया । एतदर्थ सभी धन्यवाद के पात्र हैं ।

मदन-मोहन-प्रिंटिंग प्रेस, मथुरा ने समय पर मुद्रण करके पुस्तक तैयार कीं तदर्थ मैं उसके मालिकों का आभारी हूँ ।

सुभाष वेदालंकार

गोवर्धन-ग्रन्थ-माला— १३

# संस्कृत–शिशु-गीतम्

डा. सुभाष वेदालंकार
एम. ए. (संस्कृत, वेद) पी एच डी. साहित्याचार्य
अध्यक्ष संस्कृत विभाग
महारानी जया महा विद्यालय, भरतपुर

मूल्य–३/

अलंकार–प्रकाशन, जयपुर
७४ तनेजा ब्लाक आदर्श नगर, जयपुर ३०२००४

# अनुक्रमणिका



## क्रिया-गीतानि

संस्कृत

# * शिशु-गीतम् *

मंगलाचरणम्—

विमलं सच्चिदानन्दं निराकारं जगत्पतिम्
वेद-ज्ञान-प्रदातारम् विभुं वन्दे महेश्वरम् ।।
बाल कानां विनोदाय संस्कृतेः शिक्षणाय च
देववाणी-प्रवेशाय शिशु-गीतं लिखाम्यहम् ।।

## १—शब्द-गीतम्

चटका ब्रूते चूं चूं चूं
वदति कुक्कुटः कुक डूं कूं ।।१।।

परभृत ब्रूते कुहू कुहू
हर्षं यामो मुहु मुंहुः ।।२।।

मत्त मयूरः केका केका
टर्रं टर्रं कुरुते मंडूकः ।।३।।

काको वदति का का का
बालो हसति हा हा हा ।।४।।

भषको ब्रूते भौं भौं भौं
वानरो ऽपि च खौं खौं खौं ।।५।।

रम्य- कपोतः गुटरू गूं
अइउण् ऋलृक् कुचुटुतुपु ।।६।।

# २—मयूरः

मत्त-मयूरो मत्त - मयूरः
रम्यो रम्यो मत्त - मयूरः॥
भारत - पक्षी मत्त - मयूरः
नर्तन - कुशलो मत्त - मयूरः ॥
केका केका. सदा करोति
नर्तन - काले मुदं तनोति ॥
सुन्दर - गत्या सदा विभाति
मोदं हर्षं सदा ददाति ॥
वर्षाकाले दृष्ट्वा मेघम्
नर्तनरक्तो मत्तमयूरः मत्त-मयूरः ॥मत्त...

# ३— गौः

गौरी गौरी गौरायाति
मधुरं दुग्धं सदा ददाति
दुग्धेन भवति नवनीतम्
तेन शरीरं हृष्टं पुष्टम्
पुष्टशरीरं मोदं याति ॥ १ ॥ गौरी

करणीया वै सेवा मातुः
अद्भुतरचना या वै धातुः
शिवं करोति सा वै पातुः
भक्तः तस्याः सदा विभाति ॥ २ ॥ गौरी
गो-गोमयो लाभकरो वै
पुण्यसूचको लेपकरो वै
गोमूत्रञ्च रोगहरं वै
गो- दुग्धेन रोगो याति ॥ ३ ॥ गौरी

## ४—मार्गः

सुन्दर- मार्गः सुन्दर-मार्गः
सरल आयतः सुन्दर- मार्ग : ॥
अत्र धावति टांगा- यानम्,
अत्र धावति मोटर -यानम् ।
शकट वाहनम् शकटवाहनम्,
रिक्षा-यानं रिक्षा -यानम् ।
यत्र तत्र च रम्यो भागः ॥सुन्दर-मार्गः१
सदा वामतो वयं चलेम,
मध्ये मार्गं न धावेम ।
न खादेम न तिष्ठेम,
न यानेन हता भवेम ।
अत्र श्रूयते गेयो रागः ॥ सुन्दर-मार्गः२

## ५— भारतम्

भारतम् भारतम् भारतम् भारतम्
तन्नुमो भारतं तन्नुमो भारतम् ।१।
राम--कृष्ण--दयानन्द--भूमण्डलम्
बुद्ध-गान्धि-महावीर-जन्मप्रदम् ।।२।। भारतम्
काशी-मथुरा-हारद्वार-काञ्चीपुरम्
कुरुक्षेत्र-गया-दिब्यतीर्थै र्युतम् ।।३।।भारतम्
गंङ्गा-यमुनादि-पुण्यनदी-शोभितम्
नर्मदा चन्द्रभागा-वितस्तायुतम् ।।४।। भारतम्

## ६-विद्या

विद्या धनम् ददाति
विद्या बलम् ददाति
विद्या मुदम् ददाति
विद्या जयम् ददाति ।। १ ।।
विद्या यशः करोति
विद्या सुखम् तनोति
विद्या भयम् धुनोति
विद्या तमो दुनोति ।। २ ।।
यो विद्यया विभाति
यो विद्यया सिनाति
यो विद्यया प्रयाति
स सर्वदा-विभाति ।।३।। विद्या...

## ७-मातृभूमे नमः

मातृभूमे नमो मातृभूमे नमो.
देवभूमे नमो देवभूमे नमो ।।मातृभूमे...
अग्रतस्ते नमः पृष्ठतस्ते नमः
दूरतस्ते नमः सर्वतस्ते नमः ।। मातृभूमे...
ते ऋषिभ्यो नमस्ते गुरुभ्यो नमः
ते जनेभ्यो नमस्ते बलिभ्यो नमः ।।मातृभूमे...
वेदभूमे नमो धर्मभूमे नमः
कर्मभूमे नमो वीरभूमे नमः ।। मातृभूमे...
ते गिरिभ्यो नमस्ते नदीभ्यो नमः
विन्ध्य-हिमराज-कैलासभूमे नमः ।। मातृभूमे...

## ८-संख्या-गीतम्

एको द्वौ सेव्यताम् गौः
द्वौ त्रयः पीयताम् पयः ।
चत्वारः भव सुकुमारः
पञ्च षट् वृथा न अट ।
षट् सप्त न भाव तप्तः
सप्ताष्ट न भव तुष्टः ।
अष्ट नव वै वीरो भव
नव च दश वद जबगडदश ।।

# ९-भारतवर्षम्

भारतवर्षम् भारतवर्षम्
यच्छति हर्षम् यच्छति हर्षम् ।।
यस्योत्तर - दिशि नगाधिराजः
दक्षिण-दिशि रामेश्वर - तीर्थम्
यामो मोदं दर्श दर्शम् ।। भारतवर्षम्...
पूर्वदिशायां जलधितरङ्गः
पश्चिमदिशि स चैव सभङ्गः।
ध्यायं ध्यायं यामो हर्षम्।। भारतवर्षम्...
करणीया वै सेवा तस्य
हरति च तद् दुःखं लोकस्य
यच्छति तन्नो हर्ष-प्रकर्षम् ।। भारतवर्षम्

# १० विमल

विमलम् दानम् देयम् देयम् ।
विमलम् गानम् गेयम् गेयम्
विमलम् वित्तम् सेव्यम् सेव्यम्
विमलम् चित्तम् नेयम् नेयम्
विमलम् पेयम् पेयम् पेयम्
मलिनम् मित्रम् हेयम् हेयम् ।।१।।
विमला वाणी गेया गेया
विमला देवी ध्येया ध्येया
विमला विद्या चेया चेया
विमला विद्या देया देया

विमला भाषासेव्या सेव्या
मलिना भाषा हेया हेया ॥२॥
विमलम् वस्त्रम् धार्यम् धार्यम्
विमलम् कार्यम् कार्यम् कार्यम्
विमलम् ज्ञानम् धार्यम् धार्यम्
विमलम् रुपम् ग्राह्यम् ग्राह्यम्
मलिनम् चित्तं त्याज्यम् त्याज्यम्
मलिनम् वित्तम् हार्यम् हार्यम् ॥

## ११-धन्यम् भारतवर्षम् धन्यम्

धन्यम् भारतवर्षम् धन्यम् ।
पुण्यम् भारतवर्षम् पुण्यम् ॥
यस्य संस्कृतिस्तोषदायिनी
पापनाशिनी पुण्यवाहिनी ।
यत्र पुण्यदा गङ्गा याति ।
सिन्धु-नर्मदा सदा विभाति ।
सरस्वती च धन्या धन्या
यमुना कृष्णा मान्या मान्या ।
शृणुमो यत्र च वेदं पुण्यम् ॥१॥ धन्यम्

महापूरुषा यत्र सुजाता
देवसमा ये ईश्वरभक्ताः ।
केशव-माधव- कृष्ण-समानाः
राम-बुद्ध- महावीर समानाः ।
शिवा-भगतसिंह-वीरप्रतापाः
दिव्य - शक्ति - कृत रिपुसंतापाः।
सीता-राधा-मीरा-पुण्यम् ।।२।। धन्यम्
यत्र प्रदेशा बहुलाः सन्ति
द्वाविंशति-संख्याकाः सन्ति ।
पञ्चनदो हरियाणा-देशः
राजस्थानं मध्यप्रदेशः ।
असम-विहारौ बङ्ग सुदेशः
मणिपुरं जम्मू कश्मीरम् ।
नागालैण्डं त्रिपुरा-राज्यम् ।।३।।धन्यम्
तामिलनाडू कर्णाटश्च
आन्ध्र- पांडिचेरी-गोवा च ।
अरुणाञ्चल - हिमाचलभागः
उत्तर देशो दिल्ली - भागः।
अण्डमान- निकवार-उत्कलम्
चण्डीगढ-महाराष्ट्र- मण्डलम् ।
सिक्किम-राज्यम् रम्यम् रम्यम्।३।धन्यम्
यत्र पर्वता रम्या रम्याः,
ऋषयो मुनयो धन्या धन्याः ।
कैलासश्च हिमराजश्च ।

विन्ध्य-सतपुड़ा-हेमाद्रिश्च ।
अरावली-पर्वतमाला च ।
स्वर्ण-सुमेरु-हर्षंकरश्च ।
पुण्य-पर्वतैः पुण्यं पुण्यम्।।४।। धन्यम्...
यत्र आश्रमा धन्या धन्याः
मन्त्रोच्चाराः पुण्याः पुण्यान्त
ऋषि-मुनीनां वासो यत्र ।
सुख-शान्ति-साम्राज्यं तत्र ।
तपो राजते परितस्तत्र,
प्रवहति ज्ञानसरित् सर्वत्र ।
पुण्यं तपोवनं वै पुण्यम् ।।५।। धन्यम्...

## १२-दोधूयताम् वैदिकपताका

( कव्वाली )

दोधूयतां वैदिकपताका विश्वजयिनि भारते
संजायतां घोषःश्रुतीनां पावने भुवि भारते।१।दोधू.
वर्तनं वर्णाश्रमाणाँ प्राक्तनानां स्याद्यदि
जातिभेदोऽस्तं प्रयातु सर्वदा भुवि भारते।२।दोधू.
धर्मभूमिर्देवभूमि र्मातृभूमिः स्यादिह ।
सर्व-सुखसमुदाय-सृष्टिःस्यात्तदाभुविभारते।३।दोधू.
मानवा भूयो भवन्तु कर्मवीरा जन्मना ।
धर्मवीरा देशभक्ता देवभूमौ भारते ।।४।।दोधू.
मानवो नहि निर्धनो नहि दीनहीनःस्यादिह

सर्वं इह सुखिनो भवन्तु पुण्यभूमौ भारते।५।दोधू.
रामकृष्ण-समाः सुवीरा वन्दनीयमहाजनाः ।
देवतुल्या मानवा भूयो भवन्तु भारते।६।दोधू.

## १३-भारतमातः सदा ते जयःस्यात्

भारतमातः सदा ते जयः स्यात् ।
त्वम् देवि त्वम् सच्चिदानन्दरूपे ।
त्वदीयो विजयसूर्य उदयं प्रयायात्
भारतमातः सदा ते ॥१॥

आयान्तु राम-दयानन्द-कृष्णा
यशोगौरवन्ते गगनचुम्बि भूयात् ।२।भारत

पुरा सर्वं देशा नमन्तोऽवदन् त्वाम्
धर्मगुरू साम्प्रतं वै तथा स्यात् ।३।भारत
ते संस्कृति विश्ववन्द्या सुधन्या
शिवं सर्वलोकाय सततं प्रदद्यात् ।४ भारत

## १४-महामानवो वन्द्यो वन्द्यः

महामानवो वन्द्यो वन्द्यः ।
रावणहन्ता रामो वन्द्यः
कंस-निहन्ता कृष्णो वन्द्यः
हिंसाद्वेषी बुद्धो बन्द्यः
महावीरस्वामी च वन्द्यः ।।महा मानवो।१
दयानन्द महर्षि र्धन्यः
वेद-प्रचारे सर्व-शरण्यः

श्रद्धाभक्तः श्रद्धानन्दः
रामतीर्थविवेकानन्दः
धर्मप्रचारे वन्द्यो वन्द्यः ।। महामानवो।।२।।
गुरू नानक-गोविन्दौ धन्यौ
भगतसिंह-आजादौ सेव्यौ
रावण कंसौ हेंयौ हेयौ
गान्धी-नेहरु गेयौ गेयौ
नेताजी वै मान्यो मान्यः ।।महामानवो ।।३।।
शिवा-प्रतापौ वीरौ धन्यौ
धर्म-रक्षकौ धीरौ धन्यौ
यवनराज-जेतारौ मान्यौ
मातृभूमि-भक्तौ वै मान्यौ
रामायण-कर्ता वै वन्द्यः ।। महामानवो ।।४।।
धर्मराज-युधिष्ठिरो धन्यः
सत्यप्रवक्ता राजा धन्यः
भोजश्च कवि-शरणो धन्य,
दानवीर-कर्णो वै धन्यः
भीष्मपितामहवीरो वन्द्यः ।। महामानवो ।।५।।
माता सीता दुर्गा पूज्या
राधा भक्ता मीरा पूज्या
मैत्रेयी वेदज्ञा पूज्या
हिमगिरिजा गिरिजा च पूज्या
जोजाबाई-पुत्रो वन्द्यः ।। महामानवो ६।।

## १५-गुरु-वन्दना

सर्व--देव-गुरुदेवो वन्द्यः
ज्ञान-देव-गुरुदेवो वन्द्यः ॥
संदीपन गुरुप्रवरो वन्द्यः ॥
रामदास गुरुप्रवरो वन्द्यः
रामतीर्थ गुरुवरणो वन्द्यः
गुरुर्वसिष्ठो वन्द्यो वन्द्यः ॥ सर्वदेव ॥१॥
विरजानन्द--महर्षि र्धन्यः
द्रोणाचार्यो मान्यो मान्यः
विश्वामित्रो धन्यो धन्यः
कण्वमहर्षिः पुण्यः पुण्यः ॥ सर्वदेव ॥२॥
गुरुवर-दयानन्द - महाराजः
वेदप्रवक्ता कोविदराजः
गुरुनानक गोविन्दो वन्द्यः
रामनाथ-जगदीशो वन्द्यः ॥ सर्वदेव ॥३॥

## १६—भारतमाता सदा पुण्यदा

भारतमाता सदा पुण्यदा
सुखदा वरदा बलदा धनदा
भारतमाता सदा पुण्यदा ॥
शस्य श्यामला धान्य संकुला
पुण्यतीर्थजल-पूत - भूतला
दयानन्द-महावीर-जन्मदा ।
भारतमाता सदा पुण्यदा ॥१॥

वीरप्रसविनी रिपुदलदलिनी,
अमृततुल्य-प्रमोद-दायिनी,
गंगा-यमुना-सिन्धु-पयोदा ।
भारतमाता सदा पुण्यदा ॥२॥

पुण्यदायिनी मातृभूरियम्,
शस्यश्यामला धान्यभूरियम्,
विलसति यत्र सदान्न-सम्पदा ।
भारतमाता सदा पुण्यदा ॥

## १७—चल रे शूरवीर चल

चल रे शूरवीर चल
चल रे शूरवीर चल
चल रे शूरवीर चल
चल रे शूरवीर चल ॥१॥

भव प्रतापवत् महान्
जित्वि शत्रु -दुर्जयान्
दुष्ट-दुर्गुणान् च दल ॥ चल रे ॥२॥
नीच पापिनोऽरयः

चीन-पाक - देशजाः
त्वम् तथापि न विचल ।। चल रे ।।३।।
मार्गः कुमार्गः
नदी चैव नागः
त्वम् तथापि नौ प्रचल ।। चल रे ।।४।।

## १८-वन्द्या जननी

वन्द्या जननी भारत-धरणी
शस्य - श्यामला सुखदा ।।
वीरप्रसविनी रिपुदलदलिनी
पापनाशिनी पुण्यदायिनी
सर्व - ताप--संताप-हारिणी
धनदा, वरदा बलदा ।। वन्द्या १।।
गीता यत्र सुगीता गीता
लव-कुश-जननी जाता सीता
यत्र भगवता वेदो गीतः
विचरति यत्र यशोदा ।। वन्द्या २।।
गङ्गा यमुना सिन्धु नर्मदा
पीयूषं प्रददाति सर्वदा
मथुरा द्वारापुरी पुण्यदा
प्रवहति यत्र पयोदा ।।वन्द्या ।३।
जगति तदर्थम् वै जीवेम
जगति तदर्थम् मृता भवेम
सेवायाञ्च सदा वसेम
वरदा वसुधा वसुदा ।। वन्द्या ।।४।।

## १९-रामः | कृष्णः

रामः लङ्काराजं जयति,
रामः लङ्काराज्यं तपति।
रामः सर्वं तापं हरति।
रामः नित्यं जनकं नमति।
रामः नित्यं वेदं पठति,
रामः सत्यं वदति लिखति ॥१॥

कृष्णः धर्मं चरति चरति
कृष्णः कंसं तपति तपति।
कृष्णः गीतागीतं वदति,
कृष्णः नित्यं शास्त्रं पठति।
कृष्णः योगं चरति चरति,
कृष्णः सूत्रं पठति पठति ॥

## २०. अर्जुन-भीमौ

अर्जुन-भीमौ जयतः जयतः,
कौरवराजं दलतः दलतः
अर्जुन-भीमौ वेदं पठतः,

प्रातः पितरौ नमतः नमतः।

अर्जुन-भीमौ धर्मं चरतः ।
अर्जुन-भीमौ सत्यं वदतः ।
अर्जुन - भीमौ सूत्रं रचतः
अर्जुन-भीमौ दुःखं हरतः ॥

## २१-सुधीरा धुरीणा जयन्ति जयन्ति

सुधीरा धुरीणा जयन्ति जयन्ति
हसन्तो वसन्ति मुदन्तो नदन्ति ॥सुधीरा...
सदा सर्वदुःखानि सम्यक् तरन्ति
वृथा न भ्रमन्ति वृथा न भ्रमन्ति ॥सुधीरा...
विपत्सु न धैर्यं त्यजन्ति त्यजन्ति
सदा तास्तरन्ति सदा तास्तरन्ति ॥सुधीरा...
उदारा उदारा हृदा ते लसन्ति
सदा दानसक्ता भवन्ति भवन्ति ॥सुधीरा...
सदा ताप - पाप - हरास्ते भवन्ति
मुदा वै वसन्ति मुदा वै वसन्ति ॥सुधीरा...
सुलाभे च हानौ जये चाजये च
समास्ते भवन्ति समास्ते भवन्ति ॥सुधीरा...
सहन्ते च दुःखानि सर्वाणि धीरा
धिया धर्मधीराच तापं द्रवन्ति ॥सुधीरा...

## २२—श्रेष्ठा-बालाः

हसन्ति पठन्ति चलन्ति वदन्ति
प्रधावन्ति विद्या-गृहे सर्वबालाः ॥हसन्ति
कक्षासु सर्वासु नम्रा वसन्ति
गुरूणाम् पुरः कोमलम् ते वदन्ति
अथार्धावकाशे स्वकक्षां त्यजन्ति
च नृत्यन्ति गायन्ति खाद्यम् चरन्ति
न अवकाशकाले वृथा ये अटन्ति
सदा सर्ववन्द्या भवन्ति च बालाः॥१॥हसन्ति
वृथा ये भ्रमन्ति वृथा ये नदन्ति
न रिक्ते च काले स्वपाठम् पठन्ति
न जाते ऽवकाशे गृहञ्च प्रयान्ति
वृथा ये स्वकालम् नयन्ति नयन्ति
सदा ते हि वाच्याश्च हेयाश्च निन्द्या
लभन्ते प्रशंसां न कुत्रापि बालाः॥२॥हसन्ति

## २३—बालकः

बालक ! सत्यं वदसि वदसि
बालक ! धर्मं चरसि चरसि
बालक ! देवं नमसि नमसि
बालक ! सूत्रं मन्त्रं रटसि॥
बालक ! पापं दलसि तरसि

बालक ! नित्यं पठसि पठसि

बालक ! प्रातः अटसि अटसि
तत्त्वं श्रेष्ठो भवसि भवसि ॥

## २४—मधुरम्

मधुरं लिखथः मधुरं वदथः
मधुरं चरथः मधुरं हसथः
मधुरं कुरुथः मधुरं पिबथः
मधुरौ च युवाम् मधुरौ भवथ.॥

## २५—सत्यम्

सत्यं वदथ सत्यं लिखथ
सत्यं वरथ सत्यं चरथ
धर्मं नयथ पापं तरथ
यूयं श्रेष्ठा श्रेष्ठा भवथ ॥

## २६—अहम्

अहं पठामि अहं लिखामि
अहं जयामि अहं नमामि
ऋतं वदामि मुदं वहामि
गुरुं नमामि सुखी भवामि ॥

## २७—आवाम्

आवां चलावो लिखावो वदावः
सदावां जयावो नमावो हसावः
सदावाम् च सत्यं वदावो वदावः
स्वपाठं पठावः स्वपाठं पठावः ॥

## २८—वयम्

वयं वै नमामो वयं वै नमामः
वयं सर्वतापं हरामस्तरामः ।
वयं सत्य-मार्गं चलामश्चलामः
वेदं पठामश्च शास्त्रं पठामः ।।

## २६सदा देवभक्तो विभाति विभाति

कुमार्गं जहाति कुमार्गं जहाति ।
सुमार्गं प्रयाति सुमार्गं प्रयाति ।
सुधर्मं दधाति सुधर्मं दधाति ।
अधर्मं न पाति अधर्मं न पाति ।
कुमार्गं न याति कुमार्गं न याति,
असत्यं लुनाति असत्यं लुनाति ।
च तापं हृणाति च तापं हृणाति,
स्वचित्तं पुनाति स्वचित्तं पुनाति ।
सदा देवभक्तो विभाति विभाति ।।१।।
स होमं जुहोति स होमं जुहोति .
स धर्मं तनोति स पुण्यं तनोति
स सत्यं वृणोति च सत्यं वृणोति,
स सत्यं शृणोति च सत्यं शृणोति ।
स पापं क्षिणोति च पापं क्षिणोति ।
स दानं करोति च दानं करोति ।
स पुण्यं चिनोति च पुण्यं चिनोति ।

सुखं च ददाति स पुण्यं ददाति ।
सदा देवभक्तो विभाति विभाति ॥२॥

धर्मं युनाति स धर्मं सिनाति ।
स दुष्टं धुनाति स देहं पुनाति ।
स पापं लुनाति स कामं दृणाति ।
स शत्रुं कृणाति अधर्मं कृणाति ।
स सत्यञ्च ख्याति सुधर्मञ्च ख्याति,
स प्रातश्च स्नाति स सायञ्च स्नाति
स पुण्यञ्च लाति स मोदञ्च राति ।
स पापञ्च दाति स तापं च दाति ।
सदा देवभक्तो विभाति विभाति ॥३॥
क्रीणाति पुण्यञ्च क्रीणाति पुण्यम् ।
स श्रीणाति सत्यञ्च श्रीणाति सत्यम् ।
स प्रीणाति पुण्यञ्च प्रीणाति पुण्यम् ।
स मीनाति पापञ्च मीनाति पापम् ।
स जानाति धर्मञ्च जानाति धर्मम् ।
स गृह्णाति मंत्रं च गृह्णाति मन्त्रम् ।
सदा दीनदीनं स पाति स पाति ।
सदा सर्वदेवञ्च ध्याति च ध्याति ।
सदा देवभक्तो विभाति विभाति ।

## ३०—वीराः चलन्तु

वीराः चलन्तु सम्यक् चलन्तु
तापं हरन्तु तापं हरन्तु ॥
यदि आपदा व मार्गे भवन्तु
न भीता भवन्तु न भीता भवन्तु
न धैर्यं त्यजन्तु न धैर्यं त्यजन्तु
सदा तास्तरन्तु सदा तास्तरन्तु ॥१॥वीरा
सुखे वासुखे बा जये वाजये वा
हानौ च लाभे समाना भवन्तु
मुदिता वसन्तु वृथा न अटन्तु
न सत्यं त्यजन्तु न सत्यं त्यजन्तु॥२॥ वीरा
उदारा उदारा हृदा च भवन्तु
सदा दान-सक्ता लसन्तु लसन्तु
सदा धर्मवीराः सदा कर्म-वीराः
सदा देशभक्ता भवन्तु भवन्तु ॥३॥ वीरा

—:समाप्तः—

मुद्रक—मदन मोहन प्रिंटिंग प्रेस, जनरल गंज मथुरा।

# अलंकार-प्रकाशन–जयपुर

७४ तनेजा ब्लाक, आदर्श नगर, जयपुर, द्वारा प्रकाशित व प्रचारित पुस्तकें

| | | | |
|---|---|---|---|
| १. | महाकविः कल्हणः | डा. सुभाष वेदालङ्कार | ४५/ |
| २. | कल्हणस्य राजतरङ्गिण्यां चित्रिता भारतीय-संस्कृतिः | डा. सुभाष वेदालंकार | ८०/ |
| ३. | किरातार्जुनीयम् | प्रो. मदन शर्मा, सुभाष वेदालंकार | ५/ |
| ४. | संस्कृत-निबन्ध-पारिजातः | डा. सुभाष वेदालंकार डा. नन्दकिशोर | २०/ |
| ५. | ईशकाव्यम् | डा. सुभाष वेदालङ्कार | २/ |
| ६. | महाराणा-प्रताप-चरितम् | डा. सुभाष वेदालंकार | २/ |
| ७. | संस्कृत- सोपानम् ( ४ भाग ) | डा. सुभाष वेदालंकार | ८/ |
| ८. | हिन्दी-राजतरङ्गिणी | डा. सुभाष वेदालंकार | १२/ |
| ९. | वेद-विचार-दर्पण | डा सुभाष वेदालंकार | ३/ |
| १० | शुकनासोपदेशः | सुभाष वेदालंकार, उमेश शास्त्री | ५/ |
| ११. | रघुवंशम् | डा.सुभाष वेदालंकार, मनीषा तनेजा | ६/ |
| १२. | काव्यदीपिका | डा.सुभाष वेदालंकार, मनीषा तनेजा | ४/ |
| १३. | संस्कृत-दर्शन-दीपिका | डा. सुभाष वेदालंकार | १५/ |
| १४. | संस्कृत-गद्य-सौरभम् | सुभाष वेदालंकार, मदन मोहन शर्मा | १७/ |
| १५. | संस्कृत-शिशु-गीतम् | डा. सुभाष वेदालङ्कार | ३/ |
| १६ | लघुसिद्धान्तकौमुदीः | हरिराम आचार्य, सुभाष वेदालंकार | ५/ |
| १७. | प्रतिज्ञा यौगन्धरायण | डा. सुभाष वेदालंकार | ८/ |
| १८. | ईशावास्योपनिषद् | डा. सुभाष वेदालंकार | २/५० |
| १९. | संस्कृत-सौरभम् | डा. वेदालंकार | २/ |
| २० | अलोक-अंकुरण | चेत | |
| २१. | संस्कृति-सुधा | डा. सुभा | |

*—*